# षट्कारकम्

https://sa.wikisource.org/s/16xp
नग्नं मारबलं येन निर्जितं भवपंजरम् ।
निर्वाणपदमारुढं तं बुद्धं प्रणमाम्यहम् ॥ १ ॥
षट्कारकाणि संबंध उक्तानुक्ततया द्विधा ।
विभक्तिश्चेति निश्चेयमवश्यं योगमिच्छता ॥ २ ॥
यो यत्र प्रत्ययो जातः समासो यत्र वा भवेत् ।
स एव वक्ति युञ्जानस्तस्य लिंगेन संख्यया ॥ ३ ॥
लिंगसंख्याभियोगश्च प्रायो भवति दर्शितः ।
वेदाः प्रमाणमित्यादि प्रयोगो येन सम्मतः ॥ ४ ॥
मुख्यं कर्तारमाचष्टे प्रत्ययोऽनेककर्तृको ।
मुख्यः प्रयोजको ज्ञेयः प्रयुक्तो नापरैर्यदि ।। ५ ॥
दुहादेर्गौणकं कर्म नीवहादेः प्रधानकम् ।
इनंते कर्तृकर्मैव अन्यद्वा वक्ति कर्मजः ॥ ६॥
गमनाहारबोधार्थशब्दार्थाः कर्मधातुषु ।
अनिनंतेषु यः कर्ता स्यादिनंतेषु कर्म तत् ॥ ७ ॥
न नीखाद्यऽदिशब्दाय क्रंदाह्वा कर्तृकर्मकाः ।
तथा भक्षिरहिंसायां वहो सारथिकर्तृकः ॥ ८ ॥
हृक्रोरपि तथा कर्ता इनंते कर्म वा भवेत् ।
अभिवादिदृशोरेवमात्मने विषये परम् ॥ ९ ॥
उक्तादन्यदनुक्तं स्यादुक्त स्यात्प्रथमैव हि ।
अनुक्ते तु भवन्त्यन्या द्वितीयाद्या यथायथम् ॥ १० ॥
कर्तृसंज्ञे तृतीया स्यात् द्वितीया कर्मकारके ।
तयोरथ भवेत्षष्ठी कृतिनिष्ठादिवर्जिते ॥ ११ ॥
एकदत्ते भयप्राप्तौ कर्मण्येव न कर्तरि ।
अकाकारप्रयोगे तु षष्ठी स्यादुभयोरपि ॥ १२ ॥
प्रायसः कथिता एव दृश्यंते कर्तृकर्मणोः ।
यथाऽभिधानमन्यासां प्रवृत्तिर्न निराकृता ॥ १३ ॥
तृतीया करणे प्रायश्चतुर्थी संप्रदानतः ।
पंचमी स्यादपादाने तथाऽधारे तु सप्तमी ॥ १४ ॥
संबंधेऽथ भवेत्षष्ठी निर्नयस्तावदीदृशः ।
उक्तानुक्तविचारेण प्रयोगस्तेन गम्यताम् ॥ १५ ॥

१.
नग्नं मारबलं येन निर्जितं भवपंजरम् ।
निर्वाणपदमारुढं तं बुद्धं प्रणमाम्यहम् ॥ १ ॥

इहायं कर्ता बालव्युत्पत्तये संक्षेपतः संबंधमभिदधानः प्रस्तुवन्नाह ॥

२.
षट्कारकाणि संबंध उक्तानुक्ततया द्विधा ।
विभक्तिश्चेति निश्चेयमवश्यं योगमिच्छता ॥ २ ॥
षट्कारकाणि इत्यादि । अस्यायमर्थः । योगं संबंधमिच्छता च्छात्रेणावश्यमेवेति निश्चेयमिति यावत् कतमत् तत्राह । षट्कारकाणीति संबंध उक्तानुक्ततया द्विधा विभक्तिश्चेति । अयमभिप्रायः । षट्कारकाणि । कर्तृकर्मकरणसंप्रदानापादानाधिकरणनामानि प्रत्येकमुक्तानुक्ततया द्विधा द्विप्रकाराणि वर्तंते । तथा संबंधोऽपि । तद्यथा । उक्तः कर्ता । अनुक्तः कर्ता । उक्तं कर्म । अनुक्तं कर्म । उक्तं करणम् । अनुक्तं करणम् । उक्तं संप्रदानम् । अनुक्तं संप्रदानम् । उक्तमपादानम् । अनुक्तमपादानम् । उक्तमधिकरणम् । अनुक्तमधिकरणम् । उक्तः संबंधः । अनुक्तः संबंधः ।
(१) इति तत्र उक्तः कर्ता यथा । जयति बुद्धधर्मः । ज्वलति हुताशनः । एधते विधुः । कारको देवदत्तः । वैयाकरणः पुरुषः । कृतः प्रणामो येन स

कृतप्रणामः पुरुषः । एवमादिषु आख्यातकृत्तद्धितप्रत्ययानां समासस्य च कर्तरि विहितत्वादुक्तः कर्तेत्युच्यते। उक्ते कर्तरि प्रथमेति न्यायात्प्रथमा ।
(२) अनुक्ते कर्तरि जीयते बुद्धधर्मेण । ज्वल्यते हुताशनेन । ऐध्यते विधुना । कृतं देवदत्तेन । ( सकर्मकस्यापि यदि कर्म न विवक्ष्यते तदा भावे प्रत्यय ) एवमादिषु प्रत्ययो न कर्तरि विहित इत्यनुक्तत्वात्कर्तरि तृतीया ।
(३) उक्तं कर्म यथा ।
कटः क्रियते । उदनः पच्यते । ग्रामो गम्यते । भुक्त उदनः । शतिकः पटः । आरुढवानरो वृक्षः । एवमादिषु प्रत्ययानां समासस्य च कर्मविहितत्वात् । उक्तं प्रथमा कर्मेत्युच्यते । उक्ते कर्मणि प्रथमेति न्यायात् ।
(४) अनुक्तं कर्म यथा ।
कटं करोति । उदनं पचति । ग्रामं गच्छति । उदनं भुक्तवान् । एवमादिषु प्रत्ययो न कर्मणि विहित इति अनुक्तत्वात्कर्मणि द्वितीया ।
(५) उक्तं करणं यथा ।
स्नानीयं वर्णम् । अस्यार्थः । स्नायते येन वर्णेन तत्स्नानीयम् । कृत्युटोऽन्यत्रापीति वचनात् । करणेऽनीयः एवमादिकमुक्तं करणमुच्यते उक्तत्वात्करणे प्रथमा ।
(६) अनुक्तं करणं यथा ।
स्नाति वर्णेन । असिना छिनत्ति । मनसा मेरुं गम्यते । अथवा स्नायते वर्णेन । असिना च्छिद्यते । मनसा गम्यते इत्यादिषु करणे प्रत्ययो न विहित इत्यनुक्तत्वात्करणे तृतीया ।
(७) उक्तं संप्रदानम् ।
यथा दानीयो ब्राह्मणः । अयमर्थः । दीयते यस्मै ब्राह्मणाय स दानीय इति कृत्युटोऽन्यत्रापि चेति वचनात्संप्रदाने अनीयः । एवं दक्षिणीयः ब्राह्मणः । दक्षिणा यस्मै दीयते स दक्षिणीयः । ईयस्तु हिते इति योगविभागादिह संप्रदाने ईयः । एवं दत्तभोजनोऽतिथिः । समासोऽत्र संप्रदने एवमादिकमुक्तत्वात्संप्रदाने प्रथमा ।
(८) अनुक्तं संप्रदानं यथा ।
ददाति ब्राह्मणाय । अथवा दीयते ब्राह्मणाय । एवं दातव्यं ब्राह्मणाय । एवमादिषु प्रत्ययो न संप्रदाने विहितः इति अनुक्तत्वात् संप्रदने चतुर्थी ।
(९) उक्तमपादानम् ।
भीमो राक्षसः । बिभेत्यस्मादिति भीमः भीमादयोऽपादाने इति भीभीषिभ्यां मक् उणादिकः । एवं उशन्नजनपदो देशः समासोऽपादाने एवमादिषूक्तत्वादपादाने प्रथमा ।
(१०) अनुक्तमपादानं यथा ।
बिभेति राक्षसात् । अथवा भीयते राक्षसात् । एवं भीतो राक्षसात् । नात्रापादाने प्रत्ययो विहित इत्यनुक्तत्वात् अपादाने पंचमी ।
(११) ऊ क्ताधिकरणं यथा ।
आसनं पीठम् ' अयमर्थः । आस्यते यस्मिन्निति आसनम् । करणाधिकरणयोश्चेति अधिकरणे युट् । एवं वटकिनी पूर्णिमासी प्रायेण वटका भुज्यंते यस्यां पूर्णिमास्यां तद्धितो रुढित इतीन् । एवं मत्तमातंगं वनं समासोऽधिकरणे एवमादिषूक्तत्वादधिकरणे प्रथमा ।
(१२) अनुक्तमधिकरणं यथा ।
आस्ते पीठे । अथवा आस्यते पीठे । एवमासितं पीठे । गंगायां घोषः तिलेषु तैलम् । दिवि देवाः । एवमादिषु न कश्चित् अधिकरणे प्रत्ययो विहितः । इत्यनुक्तत्वादधिकरणे सप्तमी ।
(१३) ऊक्त संबंध यथा ।
गोमान् देवदत्तः । अयमर्थः । गावो विध्यंते यस्य स गोमान् । तदस्यास्तीति संबंधे मतुप्रत्ययः । एवं चित्रगुर्देवदत्तः समासोऽत्र संबंधे । अत एवमादिषूक्तत्वात्संबंधे प्रथमा ।
(१४) अनुक्तः संबंधो यथा ।
गावो विध्यंते यस्य देवदत्तस्य । अथवा गोभिर्विद्यते देवदत्तस्य । एवं राज्ञः पुरुषः । वृक्षस्य शाखा । एवमादिष्वनुक्तत्वात्संबंधे षष्ठी ।
उक्तानुक्तयोर्दिग्मात्रमिदम् । प्रपंचस्तु यथास्थानमुत्तरत्र दर्शयिष्यामः । ननु को नाम कारकषट्कं संबंधं च वक्ति ।
३.
यो यत्र प्रत्ययो जातः समासो यत्र वा भवेत् ।
स एव वक्ति युञ्जानस्तस्य लिंगेन संख्यया ॥ ३ ॥

यो यत्रेत्यादि । अयमर्थः । यः प्रत्ययस्तद्धितस्त्यादिः कृद्वा यत्रार्थे कारके संबंधे न जातः । समासो यत्रार्थे भवेत् । स प्रत्ययः । समासश्च एनमिति यत्रार्थः विहितस्तमर्थं वक्ति । किंभूतो भवन् वक्ति तत्राह । युञ्जानः संबंध्यमानस्तस्योक्तस्य लिंगेन स्त्रीपुंनपुंसकेन संख्यया एकवचनद्विवचनबहुवचनैरिति अयमभिप्रायः । यो यमर्थमभिदधाति स तस्यैव लिंगसंख्याभ्यां युक्तो भवति । तद्यथा । कारकः पुरुषः । कारिका स्त्री । कारकं कुलमिति । वैयाकरणः पुरुषः । वैयाकरणी स्त्री । वैयाकरणं कुलम् । कृतप्रणामः पुरुषः । कृतप्रणामा स्त्री । कृतप्रणामं कुलम् । कारिके स्त्रियौ । कारिकाः स्त्रियः । कारकौ पुरुषौ । कारकाः पुरुषाः । कारके कुले । कारकानि कुलानि । इत्यादि । एवमन्येऽपि कृत्तद्धितसमासेषु लिंगसंख्यानियमो ज्ञातव्यः । आख्यातिकप्रत्ययस्तु न लिंगं ग्रहीतुमर्हति । उक्तस्य संख्यामात्रमुपादत्ते । तद्यथा । उदनं पचति सूपकारः । उदनं पचतः सूपकारौ । उदनं पचति सूपकाराः । उदनं पचति स्त्री । उदनं पचतः स्त्रियौ । उदनं पचन्ति स्त्रियः । उदनं पचति कुलम् । उदनं पचतः कुले ।

उदनं पचन्ति कुलानि । एवं कटः क्रियते देवदत्तेन । कटौ क्रियेते देवदत्तेन । कटाः क्रियन्ते देवदत्तेन । एवं सर्वत्र । त्वंयुवांयूयमित्येभिर्योगे पुनर्युष्मादिमध्यम इति मध्यमपुरुषो भवति । यथा त्वं भवसि । युवां भवथः । यूयं भवथ । एवं त्वं हन्यसे देवदत्तेन । युवां हन्येथे देवदत्तेन । यूयं हन्यध्वे देवदत्तेन । एवम सर्वत्र अहमावांवयमित्येभिर्योगे तु नरस्मयुत्तम इत्युत्तमपुरुषो भवति । तद्यथा । अहं भवामि । आवां भवावः । वयं भवामः । एवं अहं हन्ये देवदत्तेन । आवां हन्यावहे देवदत्तेन । वयं हन्यामहे देवदत्तेन । एवं सर्वत्र । अन्यत्र तु नाम्नि प्रयुज्यमानेऽपि प्रथमः पुरुषो भवति । तद्यथा । देवदत्तो भवति । देवदत्तौ भवतः । देवदत्ता भवन्ति । अभिभवति त्वां देवदत्तः । जानाति मां देवदत्तः । पच्यते उदनस्त्वया । क्रियते कटो मया । (मया स्थीयते । त्वया भूयते ।) एवं सर्वत्र लिंगसंख्यानियमः कथितः । उक्तं तु प्रथमकारिकायामुदाहृतमेव तच्च दिग्मात्रमिदम् । अन्यत्राप्याख्याकृत्तद्धितसमासैरेवोक्तम् युक्तितः प्रतिपत्तव्यम् । यदा भावे प्रत्ययः । तदा न किंचिदुक्तं भवति । तत्राकर्मकेभ्यो धातुभ्यो भावविहितप्रत्ययो भवति । सकर्मकेभ्योऽपि भवति । यदि कर्म न विवक्ष्यते । प्रयोगः । भूयते देवदत्तेन । स्थीयते युवाभ्याम् । पच्यते अस्माभिः । गम्यते देवदत्तेनेत्यादि । भावः सत्ता । सत्ता चासंख्येति तस्यामभिधेया यामौत्सर्गिकमेकवचनं प्रथमपुरुषस्यैव भवति । भावविहितकृत्प्रत्ययानां तु प्रयोगे कर्मकारकमपि विवक्षणीयम् । भावेऽपि धात्वर्थकृता व्याप्तिरस्तीति न्यायात्प्रयोगः । यथा ग्रामं गंतुं उद्यतः । उदनं भुक्त्वा व्रजति । एवमन्यत्राप्यूहनीयम् । ननु यस्य प्रधानक्रियासंबंधादुक्तत्वम् । अनुक्तत्वं च गुणक्रियाभिसंबंधात्तादृशं सकलमेवोक्तं भवतीत्यपि वक्तव्यम् । तेन उदनः पक्त्वा भुज्यते । उक्तार्थत्वादोदने प्रथमैव । अन्यथा अनुक्तद्वारेण द्वितीयाऽपि स्यात्सत्यं प्रधानानुयायिनो व्यवहाराः । तत उद्नस्य कर्मणः प्रधानशक्तिश्चेत् भुजिक्रियानिबंधनाभिहिता पचनक्रियानिबंधनाऽपि अप्रधानशक्तिरभिहिवत् प्रतिभासते ततः कुतो अनभिहते विहतानां द्वितीयादीनामवकाशः । तदुक्तं प्रधानशक्तिरभिधाने गुणशक्तिरभिहितवत् प्रकाशत इति । साध्यत्वात् भोजनक्रियायाः प्राधान्यम् । गौणत्वं च कृदंतक्रियायास्तद्विशेषनत्वादिति एवं देवदत्तो भुक्त्वा व्रजति । इत्यादावपि न्यायस्य तुल्यत्वादुक्ते कर्तरि प्रथमैव भवति न कदाचिदनुक्तद्वारेण तृतीया । एवमन्यत्रापि तस्मादुक्तत्वस्य न्यायादेव सिद्धत्वादिह विशेषो न वक्तव्य इति ।

४.
लिंगसंख्याभियोगश्च प्रायो भवति दर्शितः ।
वेदाः प्रमाणमित्यादि प्रयोगो येन सम्मतः ॥ ४ ॥

लिंगसंख्येत्यादि । सुबोधम् । प्रमीयते येन तत्प्रमाणमिति । करणाधिकरणयोश्चेति अधिकरणे युट् ।

५.
मुख्यं कर्तारमाचष्टे प्रत्ययोऽनेककर्तृको ।
मुख्यः प्रयोजको ज्ञेयः प्रयुक्तो नापरैर्यदि ।। ५ ॥

मुख्यमित्यादि । अयमर्थः । आनककर्तृके धातौ कर्तरि विहितः प्रत्ययो मुख्यमेव कर्तारमाचष्टे मुख्यश्च प्रयोजको ज्ञातव्यः प्रयत्नवत्वात् । नौ वेदसौ प्रयोजकोऽपरैः प्रयुक्तो भवेत् । प्रयुक्तो हि अन्य एव प्रयत्नवानिति तस्यैव प्राधान्यम् । तद्यथा । यदा यज्ञदत्तेन प्रयुक्तो देवदत्त उदनः पचति । तदा पचति कश्चित् तमन्यः प्रयुङ्क्ते इति वाक्ये धातुश्च हेताविति । पचधातोरिन् कर्तरि परस्मैपादं प्रयोगः पाचयत्योदनं देवदत्तेन यज्ञदत्तः । उक्तार्थत्वात् यज्ञदत्ते कर्तरि प्रथमा । देवदत्ते कर्तरि कर्तर्यनुक्तत्वात्तृतीया । यदा तु देवदत्तस्य प्रयोजको यज्ञदत्तो विष्णुमित्रेण प्रयुक्त सन् पाचयति । तदा अनया रीत्या पाअह्यतो इनंतादपि पुनरिन्प्रयोगः । पाचयत्योदनं देवदत्तेन यज्ञदत्तेन विष्णुमित्रः । अत्र प्रधानत्वादुक्ते विष्णुमित्रे कर्तरि प्रथमा । अनुक्ते तु सर्वत्र तृतीया । ईदृशी सार्वत्रिकी नीतिः ।

६ (१).
दुहादेर्गौणकं कर्म

दुहादेरित्यादि । अस्यायमर्थः दुहादेः कर्मणि जातः प्रत्ययो गौणमेव कर्म वक्ति न प्रधानम् । अभिधानात् । दुहादयो । दुहियाचिरुधिप्रच्छिभिक्षिविञामुपयोगनिमित्तमपूर्वविधौ ब्रुविशासिगुणेन च यत्स च एतदकीर्तितमाचरितं कविना इति । अत्र चकारेण जयतिप्रभृतीनामपि ग्रहणम् । जयत्यर्थयतेमंथिस्तुर्यो दंडयतीत्यपि एभिः महद्बुद्धैर्ज्ञेया द्वादशेते दुहादयः । दुह्यते गौःपयो गोपालकेन । याच्यते पौरवः कंबलं बटुना । रुध्यते गौर्व्रजं गोपालकेन पृच्छ्यते छात्रः पंथानं पथिकेन भिक्ष्यते पौरवो गां द्विजेन वक्षोऽवचीयते फलानि लोकैः उच्यते शिष्यो धर्ममुपाध्यायेन । शिष्योऽनुशिष्यते शास्त्रं पण्डितेन । एवं ग्रामः शतं जीयते छात्रेण । गर्ग्राः शतं दंड्यते नृपेण । प्रार्थ्यते गां गृहमेधी द्विजेन मथ्यते स्म जलधिरमृतं देवासुरैः । अत्रौपयुज्यमानं पयःप्रभृतिकं कर्मप्रधानं अतस्तन्निमित्तं गवादिकं गौणम् । गौणत्वात्कर्मणि विहितेनात्मनेपदेनोक्तमित्युक्ते कर्मणि प्रथमा । अनुक्ते तु द्वितिया॥

६ (२).

नीवहादेः प्रधानकम् ।

नीवहादेः प्रधानकमिति । कर्मजः प्रत्ययः कर्म वक्तीति प्रत्येकमभिसंबंधः । तत्र नीवहादयो यथा नीधोत्योह्यत्कृषोश्चापि गत्यर्थानां तथैव च द्विकर्मकेषु ग्रहणं ण्यंते कर्तुश्च कर्मणः प्रयोगो यथा । नीयते भारो ग्रामं देवदत्तेन । उत्यते भारो ग्रामं देवदत्तेन । ह्रियते कुंभो ग्रामं देवदत्तेन। अजा ग्राममाकृष्यते जनेन । अत्र भारादेर्नीयमानस्य प्रधानत्वात् उक्तत्वं ।

६ (३).
इनंते कर्तृकर्मैव अन्यद्वा वक्ति कर्मजः ॥ ६॥

इनंते कर्तृकर्मेवान्यद्वेति । अयमर्थः । इनंते धातौ पूर्वकर्ता सन् यः पश्चात्कर्म भवति तत्कर्म कर्मजः प्रत्यतो वक्ति । अन्यद्वा ग्रामादिकं कर्म । अयमभिप्रायः। शिष्टप्रयोगानुसारेण इनंते पर्यायेण कर्मोक्तं भवति । इति टीकाकारः। तद्यथा ग्रामं गम्यते देवदत्तो यज्ञदत्तेन । ग्रामो देवदत्तमिति वा । एवमोदनं भोज्यते देवदत्तो यज्ञदत्तेन । उदनो देवदत्तमिति वा । बोध्यते धर्मं शिष्योऽध्यापकेन । धर्मः शिष्यमिति वा । माणवकोऽध्याप्यते वेदमुपाध्यायेन माणवकं वेद इति वा । मासमास्यते देवदत्तो यज्ञदत्तेन । मासो देवदत्तमिति वा । अकर्मकाणां प्रयोगे कालाद्ध्वभावादेशानां कर्मसंज्ञा सिद्धैवेति मासस्य कर्मत्वम् । कालादिभिर्योगेऽप्यकर्मकाणामनिनि सति यः कर्ता स इनि व्याप्य विवक्षयां कर्मसंज्ञो भवति । ननु यदि पर्यायोऽत्र सम्मतः । तत्कथमिनंते कर्तृकर्मैवेत्येवकारः । सत्यं गत्यर्थादेः कर्तृकर्मैवेति नियमस्य केषांचिदभिमतत्वात्प्रायश्चैनमेव पक्षमाश्रित्य प्रयोगः कर्तव्यः । अपरस्तु पक्षः संभवात्दर्शित इति ।

७.
गमनाहारबोधार्थशब्दार्थाः कर्मधातुषु ।
अनिनंतेषु यः कर्ता स्यादिनंतेषु कर्म तत् ॥ ७ ॥

गमनाहारेत्यादि। सर्वत्र अनिनि सति यः कर्ता तस्येनि सति व्याप्यत्वात् कर्मतापत्रौ नियमः । प्रयोगः । गत्यर्थानां तावत्ग्रामं गच्छति देवदत्तः । ग्रामं गमयति देवदत्तं यज्ञदत्तः । (यातुं नेच्छति । तेन यापयति ग्रामं देवदत्तेन यज्ञदत्तः ।) संपदं प्राप्नोति चैत्रः । प्रापयति संपदं चैत्रं नृपः । आहारार्थानां यथा । उदनं भुंक्ते देवदत्तः । भोजयत्योदनं देवदतमीश्वरः । पयः पिबति चातकः । पाययति पयः चातकं जलदः । बोधनार्थानां यथा बुध्यते शिष्यो बोधयति धर्मं शिष्यमुपाध्यायः । पश्यति चैत्रं मित्रः । चैत्रं दर्शयति मैत्रं विष्णुमित्रः । शब्दार्थानां यथा । पठति शास्त्रं शिष्यः । पाठयति शास्त्रं शास्त्रं शिष्यमुपाध्यायः । आभाषते मैत्रं देवदत्तः । मैत्रमाभाषयति देवदत्तं यज्ञदत्तः । अकर्मकाणां यथा । उत्पद्यते घटः । घटमुत्पादयति कुलालः । मासमास्ते देवदत्तः । मासमासयति देवदत्तं यज्ञदत्तः । कोशमास्ते व्रीहिः । कोशमासयति व्रीहीन्कृषीवलः उदनपाकं स्वपिति देवदत्तः । उदनपाकं स्वापयति देवदत्तं यज्ञदत्तः । एवं सर्वत्र गत्यदर्थादीनां कर्म प्रतिपत्तव्यं यदा तु गत्यर्थादीनां इनंतानां अपरहेतुविवक्षया पुनरिन् । तदाग्रामं गमयति देवदत्तं यज्ञदत्तेन विष्णुमित्रः । इत्यादिकमुन्नेतव्यं कर्मणि तु ग्रामं गम्यते देवदत्तः यज्ञदत्तेन विष्णुमित्रेणेत्यादि । ननु अत्र प्रयोगे विष्णुमित्रप्रेरितं यज्ञदत्तस्य कर्मत्वं प्राप्नोति कथं कर्तृत्वं सत्यं इहतीनां अर्थांतरगमनादेरर्थस्य गुणीभूत् न यज्ञदत्तस्य कर्मत्वम्। अत एव गमिन्प्रभृतीनां गत्यर्थलक्षणः क्तः प्रत्ययः कर्तरि न भवतीति । यद्येवं ग्रामाय गमयतीति । गत्यर्थनिबंधना कर्मणि चतुर्थी न स्यात् । गतेरर्थस्य गुणीभूतत्वात् । गौणमुख्ययोश्च मुख्ये कर्य सं प्रत्ययः इति । सत्यं ग्रामाय गच्छति देवदत्तः । तं यज्ञदत्तः प्रयुङ्क्ते ततः प्रथमत एव ग्रामात् चतुर्थी । पश्चादिति सति सर्वमनवद्यम् ।

८.
न नीखाद्यऽदिशब्दाय क्रंदाह्वा कर्तृकर्मकाः ।
तथा भक्षिरहिंसायां वहो सारथिकर्तृकः ॥ ८ ॥

न नीत्यादि । णीञ् । खाद् । अद् । शब्दाय । क्रंद आह्वा क्वेञ् । एते कर्तृकर्मका न भवन्ति । कर्ता कर्म येषाम् ते कर्तृकर्मकाः । एषामनिनि सति यः कर्ता स इनि सति कर्मसंज्ञो न भवति । यावत् प्रयोगः । नाययति भारं ग्रामं देवदत्तेन यज्ञदत्तः । गत्यर्थत्वात्प्राप्तप्रतिषेधः । (खादयत्योदनं देवदत्तेन यज्ञदत्तः) । आदयति वा भिक्षार्थत्वे अनयोः प्राप्ते प्रतिषेधः । शब्दायधातुः । शब्दाययति कीवाकैर्मारुतः । शब्दार्थत्वे प्राप्ते प्राप्ते प्रतिषेधः । क्रंदयति बालकेन दुर्जनः । अकर्मकत्वे प्राप्तप्रतिषेधः । देवदत्तमाह्वायति यज्ञदत्तेन विष्णुमित्रः । शब्दार्थत्वे प्रतिषेधः । तथा भक्षिरहिंसायां इति कर्तृकर्मको न भवति । इति संबंधः । प्रयोगः । भक्षयति पिंडी देवदत्तेन यज्ञदत्तः हिंसायां गम्यमानायां पुनर्विधिरेव । भक्षयति पतंगान् पक्षिणं कपोतः । भक्षयति हिंसा गम्यते बाहाः सारथिकर्तृक इति अत्रापि कर्तृकर्मको न भवतीति संबंधः । न भवति सारथिः कर्ता यस्य सो सार्थिकर्तृकाः अनियंतृकर्तृक इत्यर्थः । प्रयोग" । वाहयति भारं ग्रामं वंठेन देवदत्तः सारथिकर्तृकस्य विधेरेव । यथा वाहयति बलीवर्दान् सस्यं ग्रामं सारथिः । एवमन्येऽपि ।

९ (१).
हृक्रोरपि तथा कर्ता इनंते कर्म वा भवेत् ।

हृक्रोरित्यादि । तथेति व्याप्य विवक्षया इत्यर्थः । हृन्दृशोर्गतिबोधार्थतया प्राप्ते विभाषा । कृञ् अभिवद्योऽस्य प्राप्ते । प्रयोगः । हारयति भारं ग्रामं देवदत्तं यज्ञदत्तः । देवदत्तेनेति वा कारयति कटं देवदत्तं यज्ञदत्तः । देवदत्तेनेति वा ।

९ (२).
अभिवादिदृशोरेवमात्मने विषये परम् ॥ ९ ॥

अभिवादिदृशोरित्यत्र अभिवादीति वदेर्घञंतादिन् चौर्तादिको पश्चाद्धेताविन् । अभिवादयते तनयं गुरुं जनकः । तेन येनेति वा दर्शयते भृत्यमात्मानं राजा । भृत्येनेति वा । आत्मनेपदविषये एवाभिवादिदृशोरिति नियमात् । परस्मैपदविषये यथा प्राप्तमेव । अभिवादयति भृत्येन स्वामिनं लोकः । अत्र कर्तृविवक्षैव । चैत्रं दर्शयति मैत्रं विष्णुमित्रः । दृशोर्बोधार्थतया कर्मत्वमेव । गत्यर्थादिभ्यो दृशिपर्यंतेभ्योऽन्येषामनिनि सति यः कर्ता इति अस्यापि । कर्तैव भवति । न कर्म । तद्यथा । पाचयत्योदनं देवदत्तेन यज्ञदतः । दापयति गां चैत्रेण विष्णुमित्रः । पयो दोहयति गां गोपालेन देवदत्तः । एवमन्येऽपि । पूर्विकयैव नीत्या सर्वत्रे निपुनर्हेताविन् ।

१० (१).
उक्तादन्यदनुक्तं स्यादुक्त स्यात्प्रथमैव हि ।

उक्तादनुक्तप्रतिपादनादनंतरं विभक्तीनामुपक्रमः । उक्ते स्यात्प्रथमैव हि एव शब्दोऽत्रावधारणे उक्ते कारके संबंधे वा प्रथमैव विभक्तिर्भवति । प्रथमा विभक्तिर्लिंगार्थवचन इति वचनात् । नान्या द्वितीयादय उक्तत्वात् । उक्तार्थानामप्रयोग इति वचनात् । अयमभिप्रायः । कर्मेत्यादिप्रतिपादनाय द्वितीया विधीयन्ते । यत्र तु कर्मत्वादि प्रतिपादनमन्यैरेव कृतं तत्र द्वितीयादयः कथं भवन्तीति । तद्यथा देवदत्तो भवति । कटः क्रियते । स्नानीयं वर्णम् । दानीयो ब्राह्मणः । उत्सन्नजनपदो देशः । आसनं पीठम् । गोमान् देवदत्तः । एवमन्येप्यनुसर्तव्याः । उक्तविभक्तिं प्रतिपाद्याऽनुक्तां विभक्तिसामान्येन प्रतिपादयन्नाह ।

१०(२).
अनुक्ते तु भवन्त्यन्या द्वितीयाद्या यथायथम् ॥ १० ॥

अनुक्ते त्वित्यादि अनुक्ते पुनः प्रथमां वर्जयित्वा अन्य द्वितीयाद्यो विभक्तर्यो यथायथं भवन्तीति । या विभक्ति द्वितीयादीनामन्यतमा यत्रार्थविहिता सा तत्र भवतीति । यथायथमित्यस्य परिमितोऽर्थः । अत आरभ्ययथायथमित्रनेन सूचितोऽनुक्तं विभक्तिनां नियमः प्रतिपाद्यते । कर्तसंज्ञे तृतीया स्यादिति । कर्तृसंज्ञे कारके तृतीया भवति । कर्तरि चेति वचनात् । यः प्रधानतया क्रियासिद्धौ व्याप्रियते सः क्रियां करोती निष्पादयति कर्तृसंज्ञो भवति । तद्यथा । एवदतः काष्ठैः स्थाल्यमोदनं पअहि्त इति अत देवदत्तः कर्ता अत्र हि देवदत्तेन प्रयोजितः कारकसमूहो ज्वलनादिनिजव्यापारद्वारेण क्रियामभिविवैर्तयतीति । तद्यथा । देवदत्त एव प्रयत्नवान् । ततः स एवैकः प्रधानतया कर्ता । नान्यत् काष्ठादिकम् । एवं सर्वत्र स अह द्विधा । स्वतंत्रो हेतुश्च । तत्र प्रयोजक उक्तप्रकारो देवदत्तादिः स्वतंत्रो य करोति स कर्तेत्यस्य कर्तृसंज्ञः हेतुः । स च त्रिप्रकारः । प्रेषको हेतुः । स च चन्द्रमा । आनुकूल्यभागी वा । तत्र यः प्रेषते प्रभुत्वेन नियुङ्क्ते स प्रेषकः । इत्यत्र देवदत्तो हि स्वामी कटकरणाय भृत्यमाज्ञापूर्वकं नियुङ्क्ते । यः पुनरध्येषते सत्कारपूर्वकं नियुङ्क्ते । यः पुनरध्येषते सोऽध्येषकः । यथा यज्ञदत्तो गुरुं भोजयति इत्यत्र यज्ञदत्तः सत्कारपूर्वकं गुरुं नियुंक्ते । यः पुनः प्रयोज्यस्य क्रियकरणायानुकूल्यभावं भजते न प्रेषते नाप्यध्येषते स आनुकूल्यभागी भवति । स च द्विविधः । सचेतनोऽचेतनश्च । तत्र सचेतनो यथा सुपुत्रो जनकं हर्षयति । इत्यत्र सुपुत्रो हि जनकस्य हर्षणे आनुकूल्यतां भजन्नेवं तत्र तं नियुंक्ते । अचेतनस्तु प्रयोजको भवन्नानुकूल्यभागीपरं भवति न प्रेषको नाप्यध्येषकः । अचेतनस्य प्रेषणाध्येषणे कर्तुमयोग्यत्वात् । यथा कारीषोऽग्निरध्यापयति माणवकमित्यत्र कारीषोऽग्निर्ज्वलत् । शीतादिकमपनयन्नध्ययनानुकूलतां भजन् अत्र तं प्रयुंक्ते ।

११ (१).
कर्तृसंज्ञे तृतीया स्यात्

इत्यत्र प्रयोजकत्वं कारयति यः स हेतुश्चेति हेतुसंज्ञा कर्तृसंज्ञा च स एवं प्रकारः कर्ता यदानुक्तो भवति तदा तृतीया वेदितव्या । प्रयोगः । देवदत्तेन

क्रियते कटः । यज्ञदत्तेन कार्यते भृत्येन कटः । विष्णुमित्रेण भोज्यते उदनं गुरुः सुपुत्रेण मोद्यते जनकः कारीषेणाध्मयते मावणकः । एवं त्वया कृतम् । मया उक्तम् । एवमन्येऽपि ।

११ (२).
द्वितीया कर्मकारके ।

द्वितीया कर्मकारके स्यादिति संबंधः । शेषाः कर्मकरण इत्यादिना यत्क्रियते तत्कर्मेति वचनात् । कर्तुः क्रियया यत्क्रियते यद्व्याप्यते यस्य कर्तुः क्रियायाव्यीप्तिरस्तीति तत्कारकं कर्मसंज्ञं भवति । तच्च त्रिविधम् । निर्वर्त्यं विकार्यं प्राप्यं चेति । तत्र यन्निर्वर्त्यते निष्पाद्यते । अविद्यमानमेवोत्पाद्यते तन्निर्वर्त्यम् । यथा कुलालः कुंभं करोति । अत्र कुंभो ह्यविद्यमानो मृदा उत्पाद्यते । अत" कुलालस्य कर्तुः करणक्रियया कुंभस्य स्वरुपं प्रत्यनुलंभो जन्ममात्रं प्राप्तिरुच्यते । यद्विक्रियते स देवान्यथा क्रियते तद्विकार्यम् । यथा काष्ठं दहति देवदत्तः । इत्यत्र काष्ठं स एव हि दाहेनान्यथाक्रियते अतो देवदत्तस्य कर्तुर्दाहक्रियया काष्ठानाम्न्यथाभावो विकारोऽत्र प्राप्तिरुच्यते । तदपि द्विविधम् । एवं प्रकृत्यच्छेदभूतं पूर्वोक्तमेव । अपरं गुणोत्तराधानद्वारेण । व्ययदेशांतरं यथा । सुवर्णं कुंडलं करोति अत्र हि कुंडलस्य व्यपदेशेन सुवर्णस्य प्रतिमा विद्यते । एवं देवकुलं धवलयतीत्यादावपि वेदितव्यम् । यदपूर्वं नोत्पाद्यते नाप्यन्यथाक्रियते अपि तु सदैव प्राप्यविषयीक्रियया विषयतया संबद्धो भवति । वेदस्य संबंध एव चात्र प्राप्तिरुच्यते तदेवं प्रकारं कर्म यदानुक्तं भवति । तदा द्वितीया वेदितव्या । प्रयोगः । कुंभं करोति कुंभकारः । काष्ठं दहति देवदत्तः वेदमधीते विप्रः । एवं कटं कृतवान् देवदत्तः । गां पयोदोग्धुं व्रजति गोपालकः । एवं सर्वत्र । तयोरथ भवेत्षष्ठी कृतिनिष्ठादिवर्जिते इति । तयोरनुक्तयोः कर्तृकर्मणोः निष्ठादिवर्जितकृत्प्रयोगे षष्ठी भवति । कर्तृकर्मणोः कृति नित्यमिति वचनात् । निष्ठादिप्रयोगे तु कर्तरि तृतीया कर्मणि द्वितीया भवति । न निष्ठादिष्विति षष्ठी प्रतिषेधात् । कर्तरि यथा । भवत आसिका । भवतः शायिका । पर्यायाहरणेषु चेति ।
भावे बुत्रित्यनुक्तः कर्ता कर्मणि यथा उदनस्य पाचको देवदत्तः । पक्त्वा वा । पुरांभेदको हरः । भेत्ता वा । अनेककर्मकाणां तु यावकर्मानुक्तं भवति तावत्कर्मण्यनुक्ते षष्ठी भवति । न तु प्रधान एव कर्मणि विशेषाभावात् । तद्यथा । गवां दोहकः पयसो गोपालकः । दोग्धा वा । अजाया ग्रामस्य नायको देवदत्तः । नेता वा । ग्रामस्य देवदत्तस्य गमको यज्ञदत्तः । गमयिता वा । मासस्य मैत्रस्य आसको देवदत्तः । आसयिता वा । एवं सर्वत्र द्विकर्मकेषु यत्रापि कर्मत्रितयं तत्रापि षष्ठी सर्वत्र भवति । यथा कुंभस्य भारस्य वंठस्य हारको यज्ञदत्तः । हारयिता वा । एवं शिष्यस्य धर्मस्य अध्यापकस्य वाचको मैत्रः । वाचयिता वा । ब्रूञ्शब्दार्थतया प्रयोज्यस्य कर्तुः कर्मत्वम् । एवं सर्वत्र । बुणतृचौ कर्तरि विहितावित्यनुक्तं कर्म । इह गत्यर्थकर्मणि कृत्प्रयोगेऽपि न षष्ठीति अभिधानात् कश्चित् गत्यर्थकर्मणि चतुर्थी भवति सिद्धे द्वितीयाग्रहणं प्रयत्नं ज्ञापयति तन्मते । ग्रामं गंता देवदत्तः । ग्रामाय गंता देवदत्तः वा । एवं ग्रामं गमयिता देवदत्तस्य यज्ञदत्तः । ग्रामायेति वा । इत्यादिकं भवति । अत्र च टीकाकारस्य न संमतं न चैवं शिष्टाप्रयोगा दृश्यंते । इत्यनाअरादऽस्माभिरुपेक्षित एवायं पक्षः । अथोदनस्य भृशं पाचक इत्यादिप्रक्रियाविशेषणे कर्मणि कथं न षष्ठी । सत्यम् । उदनस्य पाचकः । कटं करोतीत्यत्र कथं कटात्षष्ठी न भवति । अथ करोतीत्यस्य कटं कर्म न तु पाचकस्य इति कृदंतस्य धातोः तत्कृतः । कृदंते कर्मणि विधीयमाना षष्ठी कथं कटात भवितुमर्हति । यद्येवं तर्हि क्रियाविशेषणेऽपि समानं यतः सर्वोऽपि धात्वर्थः । करोत्यर्थे न व्याप्त इति गम्यमाने करोति क्रियाद्धारेणैव क्रियाविशेषणस्य कर्मत्वं न चैवम् । मासस्यासक इति गम्यमानप्रापणक्रियाया मासः कर्मेति न षष्ठी प्राप्नोति । यतस्तत्रांतर्भूतप्राप्तिक्रियेषूपवेशनादिषु आसिप्रभृतयो वर्तन्त इति । सिद्धांतदासिक्रियाया एव मासः । कर्मेति तत्क्रियाव्यतिरिक्तस्य क्रियांतरस्य गम्यमानस्येत्यलमिति जल्पितेन कृतिनिष्ठादिवर्जित इति । तत्र निष्ठादयः । क्तक्तवंतुशंतृङ् । आनथं सुकि उदंत । उकञ् तृन् अव्ययखलर्थाः । तत्र क्तो यथा । गतो ग्रामं देवदत्तः । गतो ग्रामो देवदत्तेन । गत्यर्थाकर्मकेत्यादिना कर्तृकर्मणोः क्तः । एवं पयोगौ दुग्धा देवदत्तेन । उदनः पचितो देवदत्तेन । यज्ञदत्तेन । भावकर्मणोरित्यादिना कर्मणि क्तः । कर्तरि कृदिति । कर्तरि प्रत्ययोऽयं भवति । निष्ठेति वचनात् । सर्वत्र क्तवंतुशंतृङ् यथा उदनं पचन् सूपकारस्तिष्ठति । ग्राममजां नयन् यज्ञदत्तः क्लिश्यति । वर्तमाने शंतृङानशावित्यादिना कर्तरि शंतृङानशौ आनश् प्रत्ययस्तु । न केवलं कर्तरि आनोऽत्रात्मने इति वचनात् । भावेकर्मणि च भवति । एवं क्वंसुकानौपरोक्षावत्वैति वचनात् । क्वंसुकानौ । क्वंसु कर्तरि । आनशवत् कानस्त्रिष्वपि भवति । आनेति कान-आनशसानङासु उत्कृष्टानुबंधानां ग्रहणं तत्र कानो यथा । कटं चकाणो देवदत्तः । पयोगां दुदुहानो गोपालकः इति कर्तरि । कटश्चकाणो देवदत्तेन । पयोगौर्दुदुहनो गोपालकेनेति कर्मणि । आनश् यथा उदनं पचमानो गायति सूपकारः । ग्राममजां नयमानः पुरुषः क्लिश्यति इति कर्तरि । सूपकारेण पच्यमानो निष्पद्यते उदनः । अजा ग्रामं नीयमाना न पलायते । इति कर्मणि । शानङ् यथा कतीहनिघ्नानाः कवचमुद्वहमाना क्षत्रियकुमाराः । कतीह मधुलिहानः वित्तानाः शक्तिः वयस्ताच्छील्य इति शानङ् कर्तर्येव भवति । वंस्विति क्वंसुवंसोर्ग्रहणं सुवं क्वंसुर्यथा । उदनं पेचिवान् सूपकारः गोपयो दुदुह्वान् गोपालक इति कर्तर्येव वंसुर्यथा । कटं चिद्वान् देवदत्त इति । वेत्ते शंतुर्वसुरिति शंतृङ्प्रत्ययस्य वंसुरादेशः । किर्यथा । कटं चक्रि देवदत्तः । दधिर्घटं देवदत्तः । आदृवर्णो यथा लोपि नांकिद्दै चेति वचनात् कर्तरि किप्रत्ययो द्विवर्धनं च उदंतेति यावदुकारांतानां कृत् प्रत्ययानं ग्रहणम् । तद्यथा । कन्यामलंकरिष्णुः पिता । ग्रामं गमयिष्णुर्देवदत्तं यज्ञदत्तः । भ्राज्यलंकृञ्भूसहि इत्यादिना तशीलतद्धर्मतत्साधुकारिष्विति इष्णु च कर्तर्येव भवति । एवम पटं चिकीर्षुस्तंतुवायः । बुभुक्षुरोदनं पैंडपातिकः । तच्छीलादिषु सनंताशंसिभिक्षासु कर्तर्येव उकञ् यथा । कन्याम कामुको वरः ग्रामं गामुको जनः तशीलादिषु श्रुकमगमेत्यादिना उकञ् कर्तर्येव तृन् यथा । सर्वज्ञातासु गतः मुंडयितारः श्राविष्टायिना भवन्ति । वधूमूधावदिता जनापवादात् तृन् । कर्तर्येव । अव्ययेति । अव्ययानाम कृत्प्रत्ययानां ग्रहणम् । तदुक्तं क्त्वामकारांतश्च कृत्स्वभावादसंख्य इत्यव्ययमेवेति । तथा क्त्वामकाराम्तकृत्प्रत्ययप्रयोगो भावे भवति इति । निश्चितम् । तत्र क्त्वा यथा । ग्रामं गत्वा देवदत्तो भुङ्क्ते । गां पयो दुग्ध्वा गोपालको विक्रीणितो एवं भवंतं प्रणम्य स्वजनो गतः । एककर्तृकः पूर्वकाले इयनेन क्त्वा प्रत्ययः समासे भाविनीत्यादिनाय चादेशः । मकारांतो यथा । कटं कर्तुं देवदत्तस्तिष्ठति । ग्राममजां नेतुमुपक्रमेत् लोकः । बुण्तुमौ क्रियायां क्रियार्थायामिति तुम् । एवं भावं भावमिह जलबुद्बुदा इव विपद्यंते । क्षणं संपदः । तत्र खल यथा विपद्यंते संपदः भूप्राप्ताविह

आत्मनेपदीयम्वाभीक्ष्यद्विश्वपदमिति णम् द्विर्वचनम् । खलार्थेति खल् युप्रत्यययोर्ग्रहणम् । तत्र खलु यथा । ईषत्करः काटा भवता । दुःप्रायं धनमव्यवसायिभिः । सुलभो धीमता विपदंतः सुलभो वीर्यवतारिवदहः ईषद्दुःसुखकृच्छ्रार्थेषु खल । युर्यथा । ईषत्पानो हि सोमो दीक्षितेन । दुर्याणा अटवा ग्राम्येण सुदानं धनमीश्वरेण । आढ्याद्य दारिद्रातेरिति युः । एवं दुःशासनो दुर्गस्थः परिपंथी पार्थिवेन दुःशासोऽसौ वा । शासियुधिदृशिमृषिमृषां वेति विकल्पेन युः । योरन्यत्र पूर्ववत् खल् अयमेव युप्रत्ययो दर्शितः । खलर्थे ज्ञातव्यः न पुनर्सुदुर्द्वेत्थादिना विहितोऽपि भवकर्मणोः कृत्यक्तखलर्था भवन्ति । एवमन्यदप्युदाहरणं एषां यथा सूत्रमेव प्रतिपत्तव्यम् । एवं पक्षे निष्ठादिषु अंगीकरणात्कृत्यानां कर्तरि षष्ठी वा भवति । तद्यथा । देवदत्तस्य कटः कर्तव्यः । कार्यः । करणीयः । कृत्यो वा । देवदत्तेनिति । तव्यानीयौ वर्णव्यंजनांताद्ध्यण् । कृदृषिमृषां वेति क्यप् । एवं सर्वत्रानेककर्तृकाणामपि यावत् कर्तरि विकल्पेन षष्ठी भवति । पाचयितव्य उदनो देवदत्ताय यज्ञदत्तस्य देवदत्तेन यज्ञदत्तेन वा । एवमिन्द्वयेऽपि । तद्यथा । पाचयितव्य उदनो देवदत्तस्य यज्ञदत्तस्य विष्णुमित्रस्य देवदत्तेन यज्ञदत्तेन विष्णुमित्रेणेति वा । एवं सर्वत्र । ननु कथं राज्ञां माता देवदत्त इत्यादौ ञ्यनुबंधेत्यादिना वर्तमाने विहितस्य क्तप्रत्ययस्य प्रयोगे कर्तरि षष्ठी भवति । ननु क्तोऽपि निष्ठादिषु अंगीकृतोऽस्ति । सत्यमिह कर्तुः संबंधविवक्षया षष्ठी । तथा क्तोऽधिकरणे च । ध्रौव्यगतिप्रत्यवसानार्थेभ्य इत्यनेन आधारे विहितस्य क्तप्रत्ययस्य संबंधे कर्तरि षष्ठी ज्ञातव्या । तद्यथा । तिष्ठति स्म ग्रामे यस्मिन् देवदत्तः स स्थितो ग्रामो देवदत्तस्य । एवं गतो ग्रामो देवदत्तस्य । भुक्तं कांस्यभाजनं विष्णुमित्रस्य । एवमन्यदपि । एवं भावविहितस्य क्तप्रत्ययस्य कर्तरि संबंधे वा षष्ठी भवति । यथा । त्वया कृतम् । (मया कृतम्) । एवं सर्वत्र नप्युंसके भावे क्तः । अयं तु विशेषः । प्रायसहः कविता एवेत्यादिश्लोकेन संग्रहीष्यते ।

१२ (१).
एकदा तूभयप्राप्तौ कर्मण्येव न कर्तरि ।

एकदा त्वित्यादि । एकदा तूभयप्राप्तौ कर्मण्येव न कर्तरि । अकाकारप्रयोगे तु षष्ठी स्यादुभयोरपि । एकदा पुनः एकस्मिन् काले कृत्प्रयोग इति यावत् । उभयो कर्तृकर्मणोः षष्ठीप्राप्तौ कर्मण्येव षष्ठी भवति । न कर्तरि । ता उभयप्राप्ति यत्र द्वेऽपि कर्तृकर्मणी अनुक्ते तिष्ठतः प्रयोगः । पाचयिता भक्तस्य देवदत्तेन यज्ञदत्तः । पाचको वा । नाययिता ग्रामस्य भारस्य भृत्येन पतिः । नायको वा । एवमिनद्वयेऽपि तद्यथा । पाचयिता उदनस्य देवदत्तेन यज्ञदत्तेन विष्णुमित्रः । पाचको वा । ग्रामस्य गमयिता देवदत्तस्य यज्ञदत्तेन विष्णुमित्रः । गमको वा । एवमादिषु सकर्मकाणां अनेककर्तृकाणां प्रधानमेव कर्तारं कर्तृविहितः । प्रत्ययो वक्तीति उभयप्राप्तिः । अतो यावत्कर्मणि षष्ठी भवति । अनुक्ते यावत्कर्तरि तृतीया । एवं दोग्धव्या गौःपयसो गोपालकेन । नेतव्यो भारो ग्रामस्य वंठेन । गमयितव्यो अध्यापकः शिष्यस्य धर्मस्य चैत्रेण नाययितव्यो भारो ग्रामस्य वंठेन । स्वामिन । गत्यर्थानामिनद्वयेऽपि । गमयितव्यो देवदत्तो ग्रामस्य यज्ञदत्तेन विष्णुमित्रेणेत्यदि । एवमादिष्वनेककर्तृकर्मणोः कर्मणि विहितः प्रत्ययो दुहादेर्गौणकं कर्मेत्यादिवचनादेकमेव कर्म वक्तीति । उभयप्राप्तिरतोऽनुक्ते यावत्कर्मणि षष्ठी । कर्तरि तु सर्वत्र तृतीयैव । तेन कृत्यनां कर्तरि वेत्यनेककर्मकेषु कर्तरि न प्रवर्तत इति । कश्चित् । वयं तु ब्रूमः । (उभयप्राप्तो कृत्येषु कर्मणि षष्ठी न भवति) । ततश्च दोग्धवया गौःपयो गोपालकेन । नेतव्यो भारो ग्रामं वंठेनेत्यादिकमेव भवति । न तु पूर्वोक्तदर्शित उदाहरणप्रपंचः । एवं सत्युवर्मे स्तौत्यमापद्य इति सूत्रं उवर्णस्त्वाच्चमापादनीया । इत्येतद्विवरणम च द्वयमुपपन्नम् । तथा जयादित्योऽपि कृत्यानां कर्तरि वेत्यत्र सूत्रे पतदेव दर्शयति । तद्यथा । उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः । वाढव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्राममजा देवदत्तेनेति स्थितम् । भावप्रत्ययेऽपि सकर्मकाणामुभयप्राप्ताविति वचनात् यावकर्मणि षष्ठी यावत् कर्तरि तृतीयैव । प्रयोगः । उदनस्य पाको देवदत्तेन पचनं वा । गवां दोहः पयसो गोपालकेन दोहनं वा । नयो ग्रामस्य भारस्य वंठेन नयनं वा । श्रिणीभूभ्यो उपसर्ग इति नायतेर्भावे घञ् । उदनस्य पाचनं देवदत्तेन यज्ञदत्तेन । ग्रामस्य गमनं चैत्रस्य विष्णुमित्रेण । नयनं भारस्य ग्रामस्य वंठेन स्वामिना । इन्द्वयेऽपि उदनस्य पाचनं देवदत्तेन यज्ञदत्तेन विष्णुमित्रेण । ग्रामस्य गमनं चैत्रस्य विष्णुमित्रेणेत्यादिकमुन्नेयम् । सर्वत्र भावे युद्वेति घञ् युटौ एवं कृञादीनामिनंतानां पक्षद्वयेऽपि रुपं सुबोधमेव । भारं भारस्य हारो ग्रामस्य देवदत्तेन यज्ञदत्तेन हारणं वा ननु कथमाश्चर्यो गवां पयसो दोहो गोपालकस्येति कर्तरि षष्ठी । सत्यं कर्तुः संबंधविवक्षायां षष्ठीत्यदोषः । आश्चर्यो गवां पयसो दोहो गोपालकेनेत्यपि कर्तरि भवत्येव । स्मृत्यर्थकर्मणीति सिद्धे कर्तृकर्मणोः कृति नित्यमित्यत्र पुनः कर्मग्रहणं उभयप्राप्तौ कर्मण्येव नियमार्थ उक्तमिति सर्वतोभयप्राप्तौ कर्मण्येवेति नियमे प्राप्ते विशेषमाह ।

१२ (२).
अकाकारप्रयोगे तु षष्ठी स्यादुभयोरपि ॥ १२ ॥

अकाकारप्रयोगे तु षष्ठी स्यादुभयोरपि । अकेति बुञ् ग्रहणं तस्य युबुञित्यादिना केरुपच्चात् । अकारेति अअडोर्ग्रहणमेषां प्रयोगे कर्तरि कर्मणि वोभयत्रापि षष्ठी भवति । अको यथा पाचिका भक्तस्य देवदत्तस्य । गवाम दोहिका पयसो गोपालकस्य । एवमत्यत्रापि यावत्कर्तरि कर्मणि षष्ठी कर्तव्येति । अलम प्रपंचेन । पर्यायाहरणेषु वेत्यत्र भावमात्रेऽपि दृश्यते इति वचनात् । भावमात्रेऽपि बुञ् यथा चिकीर्षा कटस्य देवदत्तस्य जिहीर्षा भारस्य ग्रामस्य वंठस्यापि पाचयिता भक्तस्य सूपकारस्य देवदत्तस्य ।एवम इनद्वयेऽपि पिपाचिषा भक्तस्य देवदत्तस्य यज्ञदत्तस्य विष्णुमित्रस्य इहमि सर्वत्र षष्ठी तु प्रयोग मालया संसिप्रत्ययादः अड्यथा । उदनस्य पचास्त्रीणां भिदाकारि कुंभस्य केसरिणः । सुबोध एवास्य विषयः । षानुबंहभिदादिभ्यस्त्वड् । एवमादिकमकारयोर्द्वयोर्विधायकं सूत्रं प्रतिपाद्य प्रयोगः कर्तव्यः । अन्येषां तु स्त्रीलिंगभावप्रत्ययानां कर्तरि विभाषया

षष्ठी । तद्यथा । विचित्रा सूत्रस्य कृति शर्ववर्मणेत्यादि ।

१३.
प्रायसः कथिता एव दृश्यंते कर्तृकर्मणोः ।
यथाऽभिधानमन्यासां प्रवृत्तिर्न निराकृता ॥ १३ ॥

प्रायसो बाहुल्येन यथायथं कथिता एव विभक्तयः कर्तृकर्मणोर्दृश्यंते । ततस्ता एव कथिताः अन्यासां विभक्तीनां यथाऽभिधानं प्रयोगानतिक्रमेण प्रवृत्तिर्न निराकृता । अपि तु प्रयोगानुसारेण प्रवत्वंतामित्यभिप्रायः । तद्यथा । गत्यर्थकर्मणि द्वितीया चतुर्थ्यौ चेष्टायामन ध्वनि । ग्रामाय गच्छति ग्रामं गच्छति । ग्रामं गंतुम् । ग्रामाय गंतुम् । इत्यादि गमेः साहचर्यात् । इहैककर्मका एव धातवो ग्रहीतव्याः । तेन ग्राममजां नयतीत्यादिष्वनेककर्मकेषु न चतुर्थी भवति । एवमन्यकर्मणि चानादरे प्राणिनि । न त्वां तृणं मन्ये न त्वाम तृणाय मन्ये इत्यादिस्मृत्यर्थकर्मणि । मातुः स्मरति । मातरं स्मरति । मातुरध्येति । मातरमध्येति । मातुः स्मरयति । मातरं स्मरयति । मातुः स्मर्तुं मातरं स्मर्तुमित्यादि कपोतेः प्रतियत्ने एधोदकस्योपस्कर्तुं एधोदकमुपस्कर्तुमित्यादि । (एवमनुकरोति नारायणम कर्मणि द्वितीया अनुकरोति । नारायणस्य संबंधे षष्ठी । एव हिंसार्थानामद्वारः । दास्याः भजति रोगः । दासीमिति वा । चौरस्याज्जातया चौरमिति वेत्यादि) । एवं व्यहृपणिदिवीनां व्यवहारार्थानां यथा । शतस्य व्यवहरति । शतं व्यवहरति । शतस्य दीव्यति । शतं वा । शतस्य पणायते शतं वा । एवमाशिषिनाथः । सर्पिषामाधते सर्पिर्वा । एषु व्यवहरति प्रभृतिषु कर्मणः पक्ते संबंधविवक्षया षष्ठी प्रतिपत्तव्याः । एवं कर्मणः करणसंज्ञा संप्रदानस्य च कर्मसंज्ञा विवक्षायाम (पशुना रुद्रं यजते । पशुं वा रुद्राय यजते । संज्ञो) अन्यतरस्यां तृतीया । पुत्रेण संजानीते । पुत्रं वा । एवं क्तस्य चेतिविषयस्याधिकरणविवक्षया सप्तमी । अधीती व्याकरणे अध्ययनमधीतं नपुंसके भावे क्तः । तदस्यास्त्रीति इन् । एवमन्यत्रापि विवक्षायां विभक्तयो दृष्टव्याः । एवं पूर्वदर्शितो विभक्तिभेदोऽत्र श्लोको आनीय प्रतिपत्तव्यः ।

१४.
तृतीया करणे प्रायश्चतुर्थी संप्रदानतः ।
पंचमी स्यादपादाने तथाऽधारे तु सप्तमी ॥ १४ ॥

तृतीया करणे प्रत्ययश्चतुर्थी संप्रदानतः । पंचमि स्यादपादाने तथाऽधारे तु सप्तमी । करणे कारके प्रायस्तृतीया भवति । शेषाः कर्मकरणेत्यादिना कर्ता येन क्रियते येन कर्तुः क्रियासिद्धि भवेत् । यत्कारकं कर्तुः क्रियासिद्धोपकृष्टे ये कारकं विवक्षितं तत्कारकं येन क्रिया तत्करणमिति करणसंज्ञं भवति । तच्च द्विविधम् । बाहय्माभ्यंतरं चेति । तयोः शरीरमाश्रितमाभ्यंतरम् । तस्मादन्यत् बाह्यम् । तत्र आभ्यंतरं यथा । मनसा गच्छति । चक्षुषा दृष्टम् । बाह्यं यथा । दात्रेण लुनाति । अश्वेन गच्छति इत्यादिना प्रायस इति वअह्नेनान्यापि विभक्तिर्यथाऽभिधानम् । ज्ञातव्याः इति सूचितम् । तद्यथा । स्तोकेन मुक्तस्स्तोकान्मुक्तः । अल्पेन मुक्तः अल्पान्मुक्तः । कृच्छ्रेण कृच्छ्रान्मुक्तः कतिपयान्मुक्तः कतिपयेन मुक्तः । स्तोकाल्पकृच्छ्रकतिपयस्यासन्ववअह्स्याप्यवतिविवक्षायां करणे पंचमी । एवं सर्पिषो जानीते । ज्ञोविदर्थस्य करणे संबंधे षष्ठी । एवमादिकं यथाभिधानं ज्ञातव्यम् । चतुर्थी संप्रदानतः स्यात् इति प्रत्येकमभिसंबंधः । शेषाः कर्मकरणेत्यादिना पूजानुग्रहकाम्यया यस्मै दातुमिच्छा तत्कारकं संप्रदानसंज्ञं भवति । यस्मै दिशेत्यादिनो त्च त्रिविधम् । अनुमंतृनिराकर्तृप्रेरकं । (त्यागकारणं व्याप्येनाप्तं ददातेस्तु संप्रदानं प्रकीर्तितम्) । तद्यथा यत् ददामीत्युक्ते । एवं कुरुष्वेत्यनुमन्यते । तदनुमंतृ । यथा गुरवे गां ददाति । यत् देहीति भवति भणित्वा दातारं प्रेरयति । तत्प्रेरकम् । यथा बटवे भिक्षां ददाति । यन्नानुमन्यते नापि प्रेरयति । किंतु न निराकरोति । तूष्णीमास्ते । तदनिराकर्तृ यथा बुद्धाय मालां ददाति । अत्रापि प्रायस इत्यनेन संबंधः । तस्या संप्रयच्छते सुवर्णं कामुकः । दाण्सावेच्चतुर्थ्यर्थे इति आत्मनेपदम् । अशिष्टसमाचारे संप्रदानस्य करणविवक्षयां तृतीया । एकमन्यत्रापि यथाभिधानं विभक्तिभेदो ज्ञातव्यः ।

१४ (२).
पंचमी स्यादपादाने तथाऽधारे तु सप्तमी ॥ १४ ॥

पंचमी स्यादपादान इति । शेषाः कर्मकरणेत्यादिना तत यतोपैतीत्यादिना अपादाने पंचमी । संज्ञावधिभूतस्य सीमारुपेण विवक्षितस्य कारकस्यापादानं संज्ञा भवति । तच्च द्विविधम् । चलमचलं च । तत्र चलं यथा । धावतोऽश्वात्पतितः । अचलं यथा वृक्षात्पर्णं पतति । एवं व्याघ्राद्बिभेति । उपाध्यायादधीते इत्यदिकमवधिरुपं वेदितव्यम् । ननु वृक्षस्य पर्णं पतति इति कथं षष्ठी । सत्यम् । संबंधविवक्षया हि एतेन विवक्ष्यते हि कारकाणि भवन्ति । इति दर्शितम् । तद्यथा । स्थाल्यां पचति । तथा स्थाल्यां पचति । स्थाली पचति देवदत्तः इत्यादावेकस्य नानाविधा विवक्षया दृश्यन्ते । यदा पुनरनायासेन क्रियमाणे कर्मणि कर्ता स्वव्यापारमारोपयति । तदा विवक्षया कर्म कर्ता भवति । तद्यथा । पच्यते उदन स्वयमेव । अलाति केदारः स्वयमेव । इत्यदिकर्मवत् कर्म कर्तेति कर्मकर्तुः । कर्मवद्भावादात्मनेपदम् । तस्मिन् सति यण् इवौ

भवतः । इत्योदने इत्यादौ कर्मण्युक्तत्वात् प्रथमा । पचेलिमा तंडुलाः स्वयमेव । कर्मकर्तरि केवलिनः । वत्करणं स्वाश्रयार्थमिति भावेऽपि कर्मकर्तुः प्रयोगो भवत्येव । यथा पच्यते उदनेन स्वयमेव । अनुक्तात्वात् कृत्प्रकरणे कर्मवद्भावो न भवति । तेन कर्म कर्तरि कर्मविहितः कृत्प्रत्ययो न भवन्ति । कर्तव्यं कटेन स्वयमेव । ईषत्करः कटेन स्वयमेव । एवं कर्मकर्तुर्विशेषसूत्रं तत्र प्रत्येतव्यं इति स्थितम् । तथाऽधारे तु सप्तमी । तथेति स्यादित्यर्थः । शेषाः कर्मकरणेत्यादिना (आधारे सप्तमी आधारश्च) क्रियाश्रयभूतः कर्ता कर्म वा यत्राध्रियते यत्र कर्तृकर्मणी अवतिष्ठेते । स आधारो य आधारस्तदधिकरणमित्याधारस्याधिकरणसंज्ञा । स च चतुर्विधः । उपश्लेषिकोऽभिव्यापिको वैषयिकः सामीपिकश्चेति । तत्र उपश्लेषः संयोगः । तत्रभवः उपश्लेषिकः । यथा कटे आस्ते देवदत्तः । एवं स्थाल्यां पचत्योदनम् । य अधेयमभिव्याप्य तिष्ठति सोऽभिव्यापको यथा तिलेषु तैलमस्ति । विषयो गोचरोऽनन्यत्रभावस्तत्रभवो वैषयिको यथा । दिवि देवाः सन्ति । समीपे निकटेभवः सामीपिको यथा । गंगायां घोषोऽस्तीति । एवं सर्वत्र ।

१५ (१).
संबंधेऽथ भवेत्षष्ठी निर्नयस्तावदीदृशः ।

संबंधेऽथ भवेत्षष्ठी निर्नयस्तावदीदृशः । (उक्तानुक्तविचारेण प्रयोगस्तेन गम्यताम्) । शेषाः कर्मकरणेत्यादिना (संबंधे षष्ठी) राज्ञः पुरुषः युवयोः पुत्रः युष्माकं धनमित्यादि अत्रैकक्रियाकृतः संबंधो भवति । स च परस्परापेक्षारुप उच्यते । तथा हि राज्ञः पुरुषः इति परिपालना क्रिया कृतोऽनयो संबंधः राजा हि परिपालयति पुरुषश्च परिपाल्यते । गतो राजापरिपालयतीत्युक्ते कमिति विशेषापेक्षायां राजा पुरुषेण संबद्धो भवति । पुरुषः परिपाल्यत इत्युक्ते केनेति विशेषविवक्षायां राज्ञा पुरुषः संबद्धो भवति । एवं सर्वत्र संबंधो ज्ञेयः । परस्परापेक्षा च द्वयोरप्यास्ति संबंधः । तर्हि राजशब्दवत् पुरुषशब्दादपि न कथं षष्ठी । सत्यं देवदत्तः स्थाल्यामोदनं काष्ठैः पचतीत्यादवाप्युक्तेन प्रकारेण परस्परापेक्षया सर्वत्र विद्यते एव परस्परापेक्षारुपः संबंध इति कथमिह प्रत्येकं संबंध षष्ठी । अथैवं वक्तव्यम् । (सर्वतो विद्यते एव) । यदि नाम प्रत्येकमभिसंबंधस्तथापि मैवासौ वक्तुमिष्टः । कर्तादेरर्थस्य तदानीं विवक्षितत्वात् विवक्षिते चार्थे तदभिधायी शब्दः प्रयुज्यते इति कुतः षष्ठीप्रसंगः । यद्येवमिहापि प्रतिपाद्यतया लिंगार्थः प्रधानमिति पुरुषशब्दात् प्रथमैव न च षष्ठी सतोऽपि संबंधस्यापि विवक्षितत्वात् । अत एवोक्तं भेद्यभेदकयोः श्लिष्टिः संबंधोऽन्योन्यमिष्यते । द्विष्टो यद्यपि संबंधः । षष्ठ्युत्पत्तिस्तु भेदकात् इति तस्मात् विवक्षितेऽर्थे तदाभिचायी शब्दः प्रयुज्यते इति स्थितं । अत एव विवक्षितत्वात् इत न्यायः सर्वत्र गीयते । सर्वविभक्तिष्वेकस्मिन्नार्थ एकवचनम् ।द्वयोरर्थायार्द्विवचनं बहुष्वर्थेषु बहुवचनम् । अन्वर्थबलात्प्रतिपत्तव्यम् । समानाधिकरणे तु विशेषणस्य विशेष्यस्य च एका विभक्तिर्भवति तदुक्तम् ।

यां विशेष्ये तु दृश्यंते लिंगसंख्याविभक्तयः ।
प्रायस्ता एव कर्ताया समानार्थे विशेषणे ॥ तद्यथा । कटः क्रियते दर्शनीयो विपुलः क्रियते इति प्रत्येकमभिसंबंधात् प्रथमा । एवं सर्वत्र न्यायोऽवगंतव्यः । तद्यथा । कटौ क्रियेते दर्शनीयौ विपुलौ । कटाअः क्रियन्ते दर्शनीयाः विपुलाः । एवं करोति कटं दर्शनीयं विपुलं देवदत्तेन कृतम् । ब्राह्मणाय वेदपारगाय गां देहि । महतो वृक्षात्पर्णं पतति । वृद्धस्य राज्ञः पुरुषः । आकारो व्यापिनि शकुनयः सन्ति । एवं द्विवचनबहुवचनेऽपि प्रतिपत्तव्ये । यद्येव कथं विंशतिः कटाः क्रियन्ते इति । सत्यं स्वभावात् विंशतिशब्दोऽयं एकवचनांत एव भवति इति विशेष्यस्य विभक्तिमात्रमुपादत्ते । एवमन्यदपि विज्ञेयम् । ननु तथापि क्रियन्ते इति कथं बहुवचनं विंशितोरेकवचनांतत्वादतह कटा इति बहुवचनांतेन पदेन संबंदहददोषः । ननु भवतु मा मैवम् । तथापि क्रियापदस्य प्रत्येकमभिसंबंधो अनंतरमुपदर्शितः । ततो विंशतिशब्दसंबंधादेकवचनमपि प्राप्नोति । न केवलं कटा इति संबंधाद्बहुवचनम् । सत्यं प्रधनत्वाद्विशेष्यस्य तत्संख्यामेवोपादत्ते इत्यादि यथा तंतवः पटीक्रियन्ते इति प्रधानत्वात् प्रकृतिसंख्या । अत्र हि तंतवः प्रकृतिभूताः । प्रधानं विकारस्तु तन्मूलत्वादप्रधानं पटः । एवं कृत्तद्धितसमासेष्वपि वक्तव्यः । तद्यथा । विंशतिः कटाः क्रीताः । विंशतिर्वैयाकरणाः । विंशतिः पुरुषाः कृतप्रणामा इत्यादि विशेष्यस्य लिंगसंख्ये समानाधिकरणे विशेषणे प्रतिपत्तव्ये । प्रधानं पुरुष इत्यादौ पुनः अविष्टलिंगत्वात्प्रधानादयो न विशेष्यस्य लिंगं भजन्ते इति । अत एव लिंगसंख्येत्यादिकायां प्रायोऽभिहितमिति । तदेवमुक्तानुक्तम् । प्रतिपाद्यविभक्तिं च दर्शयित्वा नियमन्नाह । निर्नयस्तावदीदृशः ।

१५ (२).
उक्तानुक्तविचारेण प्रयोगस्तेन गम्यताम् ॥

उक्तानुक्तविचारेण प्रयोगस्तेन गम्यतामिति । तावत्शब्दः क्रमापेक्षया ईदृशस्ता च हेतुना उक्तानुक्तविचारेन प्रयोगो गम्यताम् । देवदत्तेन कटः क्रियते इत्यादि रुपं वाक्यं साध्यसाधनलक्षणं गम्यताम् । प्रतिपाद्यताम् । क्रियन्तामिति यावत् । शिष्यैरिति संबंधः । गम्यतामिति गमेरिनंतस्य रुपमिदम् । गम्यमानार्थस्य प्रयोगं प्रतिकामचार इति श्लोके शिष्यैरिति नोक्तम् । तद्यथा । पर्वतः सुमेरुरित्येवायं प्रयोगः । तत्र साध्यते इति साध्यं क्रियाधात्वर्थः । क्रियाचयेन साध्यते तत्साधनं कारकषट्कम् । यथोक्तं क्रियानिमित्तं कारकं लोकतः सिद्धम् । येन च पदसमुदायेन साध्यं साधनं च प्रतिपाद्यते । तद्वाक्यं वक्तव्यम् ।
तत एव हि शब्दो व्यवहारः प्रवर्तते । तस्यैव निराकांक्षतया प्रवृत्तिनिवृत्तिहेतुत्वात् । तद्यथा । अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादि वाक्यं प्रवृत्तिहेतुः । ब्राह्मणो न हंतव्यः इत्यादि निवृत्तिहेतुकम् । न चैवं केवलस्य पदस्य प्रवृत्तिनिवृत्तिहेतुत्वं क्वचिद् भूयते । अतः शाब्दो व्यवहारः

क्रियमाणो बहुभिरेव पादैः कर्तव्य इति ज्ञात्वाऽपि पदसिद्धिमेकैकशः कदाचित् मंदमतयो बहुपदयोजनायां जनाः संदिहीरन् । अतः कारकसंबंधोद्योतसंपादयन्नाह स्थित एवायमस्माकं तानुद्दिश्य परिश्रम इति ।

इमां विंशतिसंयुक्तां अधिगम्य चतुःशतीं ।
आस्ता सरभसो लोकः संबंधोद्योतसिद्धितः ॥

इति षट्कारकनामावृत्तितः रभसनंदविरचितः संबंधोद्योतः षट्कारकापरनामा वृत्तितः॥
अक्षरमात्रपदस्वरहीनं व्यंजनसंधिविवर्धितरेफं ।
सूरिभिरेवमक्षमितव्यं को न विमुह्यति शास्त्रसमुद्रम् ।।
रभसनंदविरचितं षट्कारकमलेखि ।